# वैयाकरणभूषणसारः

श्रीकौण्ड-भट्ट-विरचितः ।



कलिकाता-संस्कृतविद्यामन्दिराध्यक्षेण

श्रीतारानाथ तर्कवाचस्पतिभट्टाचार्य्येण

संस्कृतः ।



तृतीयसंस्करणम् ।

CALCUTTA.

PRINTED AT THE NARAYAN PRESS.

1894.

# वैयाकरणभूषणसारः।



श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्।
स्फोटरूपं यतः सर्वं जगदेतद्विवर्त्तते॥
अशेषफलदातारं भवाब्धितरणे तरिम्।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम्॥
पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधम्
द्वैतध्वान्तनिवारणादिफलिकां पुंभाववाग्देवताम्।
दुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये॥

प्रारिप्सितप्रतिबन्धकव्यूहोपशमनाय कृतं श्रीपतञ्जलि-स्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते।

**फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।**
**तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते॥१॥**

उद्धृत इत्यत्र अस्माभिरिति शेषः। भाष्याब्धेः शब्दकौस्तुभ उद्धृत इत्युक्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय। अन्यथा तन्मूलकस्यास्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितसारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः। तत्र निर्णीत इत्युक्तिरितोऽप्यधिकं जिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम्॥१॥

प्रतिज्ञातमाह ।

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥२॥**

धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वयः । फलं विक्लित्त्यादि, व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया । उक्तञ्च वाक्यपदीये ।

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते इति ॥

न च साध्यत्वेनाभिधाने मानाभावः, पचति, पाकः, करोति, कृतिरित्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वात् । तथा च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वम् तद्रूपवत्त्वमसत्वभूतत्वम् एतदेवादाय ।

असत्वभूतोभावश्च तिङ्पदैरभिधीयते ।

इति वाक्यपदीयमिति द्रष्टव्यम् । अयञ्च व्यापारः फूत्कारत्वाधःसन्तापनत्वयत्नत्वादि-तत्तद्रूपेण वाच्यः । पचतीत्यादौ तत्तत्प्रकारकबोधस्यानुभवसिद्धत्वात् । न च नानार्थतापत्तिः, तदादिन्यायेन बुद्धिविशेषादेः शक्यतावच्छेदकानामनुगमकस्य सत्त्वात् । आख्याते क्रियैकत्वव्यवस्थापि अवच्छेदकबुद्धिविशेषैक्यमादायैव । उक्तञ्च वाक्यपदीये ।

गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यत इति ॥

धात्वर्थं निरूप्य तिङर्थमाह(आश्रये त्विति) । फलाश्रये

व्यापाराश्रये चेत्यर्थः । फलाश्रयः कर्म्म, व्यापाराश्रयः कर्त्ता । तत्र फलव्यापारयोर्धातुलभ्यत्वात् न तिङस्तदंशे शक्तिरन्यलभ्यत्वात् । शक्यतावच्छेदकं चाश्रयत्वं तत्तच्छक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते । ननु अनयोराख्यातार्थत्वे किं मानम् प्रतीतेर्लक्षणया, आक्षेपात् प्रथमान्तपदाद्वा सम्भवादिति चेत् अत्रोच्यते ।

"लः कर्मणि च भावे चाकर्मकेभ्य इति" ।

सूत्रमेव मानम् । अत्र हि चकारात् "कर्त्तरि कृदिति" सूत्रोक्तं कर्त्तरीत्यनुकृष्यते बोधकतारूपां तिबादिशक्तिं तत् स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्त्तरि चानेन विधीयन्ते नकारविसर्गादिनिष्ठां कर्मकरणादिबोधकशक्तिमादाय शसादिविधानवत् । न च सूत्रे कर्त्तृकर्मपदे कर्तृत्वकर्मत्वपरे तथा च कर्तृत्वं कृतिः, कर्मत्वञ्च फलमेवार्थोऽस्त्विति शङ्क्यम्, फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात् । अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत्तर्हि कृतामपि कर्तृकर्मादिवाचित्वं न सिध्येत् । "कर्त्तरि कृदिति" च, "लः कर्मणि" इत्यनेन तुल्ययोगक्षेमम् । अपि च मीमांसकानां कृतामिवाख्यातानामपि कर्तृवाचित्वमस्तु भावनाया एव आक्षेपेण कृदादिवत्प्रतीतिसम्भवे वाच्यत्वं मास्तु । तथा सति प्राधान्यं तस्या न स्यादिति चेन्न घटमानयेत्यादावाक्षिप्तव्यक्तेरपि प्राधान्यवदुपपत्तेः । पचतीत्यादौ पाकं करोतीति भावनाया विवरणदर्शनाद्वाच्यत्वमिति चेत् पाकानुकूलव्यापारवतः कर्त्तु-

रपि विवरणविषयत्वाविशेषात्। न च कर्त्तुर्विवरणं तात्पर्यार्थविवरणं पाकं करोतीति अशब्दार्थकर्मत्वविवरणवत् इतरेतरद्वन्द्वे समुच्चयांशविवरणवद्वा न तदर्थनिर्णायकमिति वाच्यम् भावनायामपि तुल्यत्वात्। किञ्च पचति देवदत्त इत्यत्र अभेदान्वयदर्शनात् तदनुरोधेन कर्त्तुर्वाच्यत्वमावश्यकम् पक्ता देवदत्त इतिवत्। न च अभेदबोधे समानविभक्तिकत्वं नियामकम् तच्च तत्र नास्तीति वाच्यम् सोमेन यजेत स्तोकं, पचति, राजपुरुष इत्यादावपि अभेदबोधानापत्तेः। न च लक्षणया कर्त्तुरुक्तत्वात् सामानाधिकरण्यं पिङ्गाक्ष्यादियौगिकानामपि द्रव्यवाचित्वानापत्तेः। एवं वैश्वदेवीत्यादितद्धितानामपि। "अनेकमन्यपदार्थे" "सास्य देवता" इत्यनुशासनेन पिङ्गे अक्षिणी यस्याः, विश्वे देवा देवता अस्या इति विग्रहदर्शनात् प्रधानषष्ठ्यर्थे एव अनुशासनलाभात्। तथा च "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति" वाक्ये द्रव्यानुक्तेरारुण्यस्य स्ववाक्योपात्तद्रव्य एवान्वयप्रतिपादकारुणाधिकरणोच्छेदापत्तिः। द्रव्यवाचकत्वसाधकमूलयुक्तः सामानाधिकरण्यस्योक्तरीत्योपपत्तेरित्ति प्रपञ्चितं विस्तरेण बृहद्वैयाकरणभूषणे। (तिङः) इति बोधकतारूपा शक्तिस्तिङ्ष्वेवेत्यभिप्रेत्येदम्। पदार्थं निरूप्य वाक्यार्थं निरूपयति (फले) इत्यादि। विक्लित्त्यादि फलं प्रति (तिङर्थाः) कर्तृकर्मसंख्याकालाः। तत्र कर्तृकर्मणी फलव्यापारयोर्विशेषणे, संख्या कर्तृप्रत्यये कर्त्तरि, कर्मप्रत्यये कर्मणि, समानप्रत्ययोपात्तत्वात्। तथा च आख्यातार्थसंख्याप्रकारकबोधं प्रत्याख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरिति कार्य्यकारण-

भावः फलितः । नैयायिकादीनामाख्यातार्थसंख्यायाः प्रथमान्तार्थे एवान्वयादाख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावो वाच्यः सोऽपि चन्द्र इव मुखं दृश्यते, देवदत्तो भुक्त्वा व्रजतीत्यादौ चन्द्रक्त्वार्थयोः आख्यातार्थानन्वयादितराविशेषणत्वघटित इत्यतिगौरवम् । इदमपि कर्तृकर्मणोराख्यातार्थत्वे मानमिति स्पष्टं भूषणे । कालस्तु व्यापारे विशेषणम् । तथा हि "वर्तमाने लट्" इत्यत्र अधिकाराद्धातोरिति लब्धम् तच्च धात्वर्थं वदत्प्राधान्याद्व्यापारमेव ग्राहयतीति तत्रैव तदन्वयः । न च संख्यावत्कर्तृकर्मणोरेवान्वयः शङ्कः, अतीतभावनाके कर्त्तरि पचतीत्यापत्तेः अपाक्षीदित्यनापत्तेश्च पाकानारम्भदशायां कर्तृसत्त्वे पक्ष्यतीत्यनापत्तेश्च । नापि फले तदन्वयः फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेः पक्ष्यतीत्यापत्तेश्च इत्यवधेयम् । न चामवातजड़ीकृतकलेवरस्य उत्थानानुकूलयत्नसत्त्वात् उत्तिष्ठतीति प्रयोगापत्तिः, परयत्नस्याज्ञानादप्रयोगात् । किञ्चिच्चेष्टादिनावगतौ चायमुत्तिष्ठति शक्त्यभावात् फलन्तु न जायत इति लोकप्रतीतेरिष्टत्वात् । एवञ्च तिङर्थो विशेषणमेव भावनैव प्रधानम् । यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टं, तथापि "भावप्रधानमाख्यातं सत्वप्रधानानि नामानीति" निरुक्ताङ्गुवादिसूत्रादिस्थक्रियाप्राधान्यबोधकभाष्याच्च धात्वर्थभावनाप्राधान्यम् अध्यवसीयते । अपि च आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः समभेदान्वयात् प्रथमान्तस्य प्राधान्यापत्तिः । तथा च पश्य मृगो धावतीत्यत्र भाष्यसिद्धैकवाक्यता न स्यात् प्रथमान्त-

मृगस्य धावनक्रियाविशेष्यस्य दृशिक्रियायां कर्मत्वापत्तौ द्वितीयापत्तेः। न चैवम् प्रथमासामानाधिकरण्यात् शत्रृप्रसङ्गः। एवमपि द्वितीयाया दुर्वारत्वेन पश्य मृग इत्यादिवाक्यस्यैव असम्भवापत्तेः। न च पश्येत्यत्र तमिति कर्माध्याहार्य्यम् वाक्यभेदप्रसङ्गात् उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतया अन्वयस्य प्रतिपिपादयिषितत्वात् अध्याहारे अनन्वयापत्तेश्च। एवञ्च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम् किन्तु आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्य्यकारणभावो द्रष्टव्यः। भावनाप्रकारकबोधं प्रति तु कृज्जन्योपस्थितिवत् धात्वर्थभावनोपस्थितिरपि हेतुः। पश्य मृगो धावति, पचति भवतीत्याद्यनुरोधादिति दिक्। इत्थञ्च पचतीत्यत्र एकाश्रयिका पाकानुकूला भावना, पच्यते इत्यत्र एकाश्रयिका या विक्लित्तिस्तदनुकूला भावनेति बोधः। देवदत्तादिपदप्रयोगे तु आख्यातार्थकर्त्रादिभिस्तदर्थस्य अभेदान्वयः। घटो नश्यतीत्यत्रापि घटाभिन्नाश्रयको नाशानुकूलो व्यापार इति बोधः। स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम्। अतएव तस्यां सत्यां नश्यति, तदत्यये नष्टः, तद्भावित्वे नङ्क्ष्यतीति प्रयोगः। देवदत्तो जानातीच्छतीत्यादौ च देवदत्ताभिन्नाश्रयको ज्ञानेच्छाद्यनुकूलो वर्त्तमानो व्यापार इति बोधः स चान्तत आश्रयतैवेति रीत्योह्यम्॥ २॥

ननु आख्यातस्य कर्तृकर्मशक्तत्वे पचतीत्यत्र उभयबोधा-

पत्तिः कर्तृमात्रबोधवत् कर्ममात्रस्यापि बोधापत्तिरित्यत-स्तात्पर्य्यग्राहकमाह ।

**फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः ।**
**व्यापारे शप्श्नमाद्यास्तद् द्योतयन्त्याश्रयान्वयम् ॥३॥**

तङादयः फले आश्रयान्वयं द्योतयन्ति फलान्वय्याश्रयस्य कर्मत्वात्तद्द्योतकाः कर्मद्योतकाः व्यापारान्वय्याश्रयस्य कर्तृत्वात्तद्द्योतकाः कर्तृद्योतका इति समुदायार्थः । (द्योतयन्ति) तात्पर्य्यं ग्राहयन्ति ॥ ३ ॥

नन्वेवं "क्रमादमुं नारद इत्यबोधि स" इत्यादौ पच्यते ओदनः स्वयमेवेत्यादौ च व्यभिचारः । कर्मणः कर्तृत्वविवक्षायां कर्त्तरि लकारे सति "कर्मवत् कर्मणा तुल्यक्रिय" इत्यतिदेशेन यगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि कर्त्तुरेव बोधाद्व्यापारे एवाश्रयान्वयाच्च । अबोधीत्यत्रापि बुध्यतेः कर्त्तरि लुङ् तस्य "दीपजने"ति चिण् "चिणोलुगिति" तस्य लुक् इति साधनादित्याशङ्कायामाह ।

**उत्सर्गोऽयं कर्मकर्तृविषयादौ विपर्य्ययात् ।**
**तस्माद्यथोचितं ज्ञेयं द्योतकत्वे यथागमम् ॥४॥**

(कर्मकर्तृविषयादौ) पच्यते ओदनः स्वयमेवेत्यादौ अत्र ह्येकोदनाभिन्नाश्रयकः पाकानुकूलो व्यापार इति बोधः । क्रमादित्यादिपदग्राह्यम् अत्र सामान्यविशेषज्ञानपूर्वक एकनारदविषयकज्ञानानुकूलः कृष्णाभिन्नाश्रयकोऽतीतो व्यापार इति बोधः । (यथोचितमिति) सकर्मकधातु-

समभिव्याहृतभावसाधारणविधिविधेय चिण्यगादिकर्मद्योतकमिति भावः ॥ ४ ॥

एवं तिङाद्यन्ते भावनाया अवाच्यत्वं वदतः प्राभाकरादीन् प्रति सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमुपवर्ण्य (फलव्यापारयोरिति) प्रतिज्ञातं धातोर्व्यापारवाचित्वं व्यवस्थापयति ।

व्यापारो भावना सैवोत्पादना सैव च क्रिया ।
कृञोऽकर्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ॥ ५ ॥

पचति पाकमुत्पादयति पाकानुकूला भावना तादृश्युत्पादनेत्यादिविवरणाद्विव्रियमाणस्यापि तद्वाचकतेति भावः । व्यापारपदं फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम् अतएव पचतीत्यत्र अधःसन्तापनत्वफूत्कारत्वचुल्लुप्रपरिधारणत्वयत्नत्वादिभिर्बोधः सर्वसिद्धः । न चैवमेषां शक्यतावच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यम् रथो गच्छति जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी, शक्यतावच्छेदकत्वस्यापि लक्ष्यतावच्छेदकत्ववद् गुरुणि सम्भवात् तयोर्वैषम्ये बीजाभावात् । न च पचति पाकं करोतीति यत्नार्थकरोतिना विवरणाद्यत्न एवाख्यातार्थ इति वाच्यम् । रथो गमनं करोति बीजादिना अङ्कुरः कृत इति दर्शनात् कृञो यत्नार्थकताया असिद्धेः । किञ्च भावनाया अवाच्यत्वे घटं भावयतीत्यत्रेव घटो भवतीत्यत्रापि द्वितीया स्यात् न चात्र घटस्य कर्तृत्वेन तत्संज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम् अनुगतकर्तृत्वस्य त्वन्मते दुर्वचत्वेन घटस्याक-

र्त्वात् । कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात् । धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात् । अपि च भावनाया अवाच्यत्वे धातूनां सकर्मकत्वाकर्मकत्वविभाग उच्छिन्नः स्यात् । स्वार्थफलव्यधिकरणव्यापारवाचित्वं स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्मकत्वं भावनाया वाच्यत्वमन्तरेणासम्भवि । अन्यतमत्वं तत्त्वमिति चेत् न एकस्यैवार्थभेदेन अकर्मकत्वसकर्मकत्वदर्शनात् तदेतदभिसन्धाय आह (कृञ) इति । अयं भावः व्यापारावाच्यत्वपक्षे फलमात्रमर्थ इति फलितम् । तथा च करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयम् । तथा च यतौ प्रयत्न इतिवत् फलस्थानीय यत्नवाचकत्वाविशेषादकर्मकतापत्तिः उक्तरीत्या दुर्वारेति । तथा च (नहि यत्नः) इत्यत्र फलस्थानीयत्वेनेति शेषः । (कृञः) इति धातुमात्रोपलक्षणं सर्वेषामपि अकर्मकता सकर्मकता वा स्यादिति भावः । अथवा ( व्यापारो भावना ) इत्यर्द्धेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत्साधयन् नैयायिकाभ्युपगतं जानाति कृञादेः केवलज्ञानयत्नादि क्रियामात्रवाचित्वं दूषयति (कृञः) इति । अयं भावः फलांशस्य अवाच्यत्वे व्यापार एव धात्वर्थः स्यात् । तथा च स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूपसकर्मकत्वोच्छेदापत्तिः । न च कृञादौ सकर्मकत्वव्यवहारो भाक्त इति नैयायिकोक्तं युक्तम् । व्यवहारस्य भाक्तत्वेऽपि कर्मणि लकारासम्भवात् । न हि तीरे गङ्गापदस्य भाक्तत्वेऽपि तेन स्नानादिकार्य्यं कर्त्तुं शक्यम् । एवञ्च (नहि यत्न) इत्यत्र यत्नमात्रमित्यर्थः ॥ ५ ॥

अतएवाह ।

**किन्तूत्पादनमेवातः कर्मवत्स्यात् यगाद्यपि ।**
**कर्मकर्त्तर्य्यन्यथा तु न भवेत् तद्दृशेरिव ॥ ६ ॥**

( उत्पादनम् ) उत्पत्तिरूपफलसहितं यत्नादि कृञर्थं इत्यर्थः । फलस्य वाच्यत्वे युक्त्यन्तरमाह (अतःइत्यादि)। यतः कृञो यत्नमात्रमर्थो नेष्यते (अतः कर्मवत्स्यादिति) पदेन कर्मवत्कर्मणा तुल्यक्रिय इति सूत्रं लक्ष्यते । अयमर्थः यत एव अस्योत्पादनार्थकता अतः पच्यते ओदनः स्वयमेवेतिवत् क्रियते घटः स्वयमेवेति यगादयोऽप्युपपद्यन्ते । अन्यथा यत्नस्य कर्मनिष्ठत्वाभावात्तन्न स्यात् दृशिवत् । यथा दृश्यते घटः स्वयमेवेति न दर्शनस्य घटावृत्तित्वात् तथा यत्नस्यापीति, तथा प्रयोगानापत्तेरिति ॥ ६ ॥

नन्वेवं कृञादेरिव जानातीत्यादेरपि विषयावच्छिन्नावरणभङ्गादिफलवाचित्वमावश्यकम् अन्यथा सकर्मकतानापत्तेः तथा च ज्ञायते घटः स्वयमेवेति किन्न स्यात् । एवं ग्रामो गम्यते स्वयमेवेत्याद्यपीत्याशङ्कां मनसिकृत्याह ।

**निर्वर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते ।**
**न तु प्राप्ये कर्मणीति सिद्धान्तो हि व्यवस्थितः ॥७॥**

ईप्सितं कर्म त्रिविधं निर्वर्त्त्यं विकार्य्यं प्राप्यञ्च । तत्र आद्ययोः कर्मवद्भावो, नान्त्ये, प्राप्यत्वञ्च क्रियाकृतविशेषानुपलभ्यमानत्वमिति तदर्थनिष्कर्षे वक्ष्यते । न ह्ययं घटः केनचिद्दृष्टो ग्रामोऽयं केनचिद्गत इति अक्ष्ण कर्मदर्श-

नेन अवगन्तुम् । घटं करोतीति निर्वर्त्त्यं, सोमं सुनोतीति विकार्य्यं च, तज्ज्ञातुं शक्यमिति न तत्प्राप्यम् । तथा च घटादेर्दृश्यादौ प्राप्यकर्मत्वान्नोक्तातिप्रसङ्ग इति भावः । धातूनां फलावाचकत्वेत्यजिगम्योः पर्य्यायतापत्तिः क्रियावाचकत्वा-विशेषात् फलस्योपलक्षणत्वेऽपि एकक्रियाया एव पूर्वदेशविभा-गोत्तरदेशसंयोगजनकत्वादुक्तदोषतादवस्थ्यमित्यपि वदन्ति । तस्मादावश्यकं सकर्मकाणां फलवाचकत्वम् अकर्मकाणान्तु तन्निर्विवादमेव भू सत्तायामित्याद्यनुशासनाच्च । अतएव "इग्रर्थः पचिरिति" भाष्यं सङ्गच्छत इति दिक् ॥७॥

एवं सिध्यतु फलव्यापारयोर्वाच्यत्वम् किन्तु आख्यातवाच्यैव सा भावना न धातोः, प्राधान्येन प्रतीयमानव्यापारस्य धात्व-र्थतायाः "प्रकृतिप्रत्यययोः प्रत्ययार्थप्राधान्यमिति" न्याय-विरुद्धत्वात् "तदागमे हि दृश्यत इति" न्यायविरुद्धत्वाच्च । एवञ्च स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म-कत्वम्, आख्यातार्थव्यापाराश्रयत्वञ्च कर्तृत्वं वाच्यमित्यादि वदन्तं मीमांसकम्मन्यं प्रत्याह ।

**तस्मात्करोतिर्धातोः स्याद्व्याख्यानं न त्वसौ तिङा ।**
**पक्ववान् कृतवान् पाकं किं कृतं पक्वमित्यपि ॥८**

(तस्मात्) अभिप्रायस्य्हेतोः स चेत्यम् । फलमात्रस्य धात्वर्थत्वे ग्रामो गमनवानिति प्रतीत्यापत्तिः संयोगाश्रय-त्वात् । फलानुत्पाददशायां व्यापारसत्त्वे पाको भवतीत्यना-पत्तिः, व्यापारविगमे फलसत्त्वे पाको विद्यत इत्यापत्तिश्च । यत्तु भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वान्न अनुपपत्ति-रिति तन्न कर्त्राख्यातवत् "कर्त्तरि कृदि"त्यत एव तद्विधान-लाभे भावे विधायकानुशासनवैयर्थ्यापत्तेस्तद्विरोधापत्तेश्च ।

अथ व्यापारोऽपि धात्वर्थ इत्यभ्युपेयमिति चेत्तर्हि धातुत एव सकलव्यापारलाभसम्भवेनाख्यातस्य पृथक्शक्तिकल्पने गौरवमिति। पचतीत्यस्य पाकं करोतीति विवरणात्मा ( करोतिर्धातो: ) एव (व्याख्यानं) विवरणम् अतस्तदपि नाख्यातार्थत्वसाधकमिति भाव: मीमांसकोक्तं बाधकमुद्धरन् तन्मतं दूषयति न तु इत्यादिना। नासौ तिङां व्याख्यानम् पक्ववानित्यादावनन्वयापत्ते:। अयं भाव:। "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयो: प्रत्ययार्थप्राधान्यम्" इत्यस्य हि विशेष्यतया प्रकृत्यर्थप्रकारकबोधं प्रति तदुत्तरप्रत्ययजन्योपस्थिति: हेतुरिति कार्य्यकारणभाव: फलित:। तथा च पक्ववानित्यत्र पाक: कर्मकारकं, क्तवतुप्रत्ययार्थ: कर्तृकारकम्। तयोश्चारुणाधिकरणरीत्या वक्ष्यमाणस्मद्रीत्या चान्वयासम्भव इति प्रकृतिप्रत्ययार्थयो: अन्वयनियमस्यैवाभावे क्व ? प्राधान्यबोधक उक्तकार्य्यकारणभाव:। न च

सम्बन्धमात्रमुक्तञ्च श्रुत्या धात्वर्थभावयो:।
तदेकांशनिवेशि तु व्यापारोऽस्या न विद्यते इति॥

भट्टपादोक्तरीत्या सम्बन्धसामान्येन कारकाणामन्वय: शक्य:, योग्यताविरहात् अन्वयप्रयोजकरूपवत्त्वस्य तत्त्वात्। क्रियान्वयित्वमेव हि कारकान्वयितावच्छेदकमिति वक्ष्यते। तदेतदाविष्कर्त्तुं विवरणेन धात्वर्थक्तवत्वर्थयो: कर्मत्वकर्तृत्वे दर्शयति कृतवान् पाकमिति। वस्तुत: प्रत्ययार्थ: प्रधानमित्यस्य य: प्रधानं स प्रत्ययार्थ एवेति वा, य: प्रत्ययार्थ: स प्रधानमेवेति वा नार्थ: अजा अश्वा छागीत्यत्र स्त्रीप्रत्ययार्थे स्त्रीत्वस्यैव प्राधान्यापत्ते: छाग्यादेरनापत्तेश्च। किन्तु उत्सर्गोऽयम् विशिष्यत्वादिना बोधस्तु तथा व्युत्पत्त्यनुरोधात्। अतएव नैयायिकानां प्रथमान्तविशेष्यक एव बोध:। लक्षणायाम्

आलङ्कारिकाणां शक्यतावच्छेदकप्रकारक एव बोधो न नैयायिकादीनाम्। घटः कर्मत्वमित्यादौ विपर्य्ययेणापि व्युत्पन्नानां नैयायिकनव्यादीनां बोधो न तद्व्युत्पत्तिरहितानाम् अन्येषां तत् निराकाङ्क्षमेवेत्यादिकं सङ्गच्छते। अतएव "प्रधानप्रत्ययार्थवचनमर्थस्य अन्यप्रमाणत्वात्" इत्याह भगवान् पाणिनिः। प्रधानं प्रत्ययार्थ इति वचनं नेत्यनुवर्त्य न कार्य्यम् अर्थस्य अर्थावबोधस्य अन्यप्रमाणत्वात् व्युत्पत्त्यनुसारित्वादिति हि तदर्थः। एवं सत्यपि नियामकापेक्षणे "भाव प्रधानमाख्यात"मिति वचनमेव गृह्यतामिति सुधीभिरूह्यम्। "तदागमे हीति"न्यायोविवरणख्यातिव्याप्तमित्याह (किं कृतं पक्कमिति)। कृत्वा विवरणं प्रतीतिश्च पक्कमित्यत्रापीति, तत्रापि भावना वाच्या स्यादिति भावः। नन्वस्तु तिङ इव कृतामपि भावना वाच्येत्यत आह अपीति। तथा च उभयसाधारण्येन तत्प्रतीतेः उभयसाधारणो धातुरेव वाचक इति भावः। भवद्रीत्या प्रत्ययार्थत्वात् प्राधान्यापत्तिश्चेति द्रष्टव्यम् ॥८॥

व्यापारस्य धात्वर्थत्वे साधकान्तरमाह।

**किं कार्य्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि।**
**किञ्च क्रियावाचकतां विना धातुत्वमेव न ॥ ९ ॥**

कार्य्यमित्यत्र "ऋहलोर्ण्यदिति" कर्मणि ण्यत् पचनीयमित्यादौ चानीयर् आदिना ज्योतिष्टोमयाजी इत्यादौ करणे उपपदे कर्त्तरि णिनिः। एते च क्रियायोगमन्तरेणासन्तस्तद्वाच्यतां बोधयन्ति विना क्रियां कारकत्वासम्भवेन तद्वाचकप्रत्ययस्यापि असम्भवात्। न च गम्यमानक्रियामादाय कारकयोग इति भाट्टरीतिर्युक्ता आख्यातेऽपि तथापत्तौ तत्रापि भावनाया वाच्यत्वासिद्ध्यापत्तेः। अथ लिङ्गसंख्या-

न्वयानुरोधात् कर्त्तुर्वाच्यत्वम् आवश्यकमिति तेन आक्षेपाद्भावनान्वयः स्यादिति मतम् तर्हि संख्यान्वयोपपत्तये आख्यातेऽपि कर्त्ता वाच्यः स्यात्। पक्ववानित्यादौ कालकारकान्वयानुरोधाद्भावनाया अपि वाच्यत्वस्य आवश्यकत्वाच्च इति भावः। अपिना हेत्वन्तरसमुच्चयः तथा हि नखैर्भिन्नो नखभिन्नः हरिणा त्रातो हरित्रात इत्यादौ "कर्त्तृकरणे कृता बहुलमिति" समासो न स्यात् पुरुषो राज्ञो भार्य्या देवदत्तस्य इतिवदसामर्थ्यात्। न च अध्याहृतक्रियाद्वारा सामर्थ्यं वाच्यं दध्योदनः गुड़धाना इत्यादिवत्, अन्यथा तत्रापि" अन्नेन व्यञ्जनं भक्ष्येण मिश्रीकरणमिति समासो न स्यादिति वाच्यम्। तत्र विध्यानर्थक्यादगत्या तथास्वीकारेऽपि हरिक्रृतमित्यादौ साक्षाद्धात्वर्थान्वयेन उपपद्यमानस्य कर्त्तृकरण इत्यस्य आक्षेपेण परम्परासम्बन्धे प्रवृत्त्ययोगात्। न च एकस्यां क्रियायाम् अन्वयित्वमेव सामर्थ्यमिति शङ्क्यम्, असूर्य्यम्पश्येत्यादेः असमर्थसमासत्वानापत्तेः। इष्टापत्तौ कृतः सर्वोमृत्तिकयेत्यत्र कृतसर्वमृत्तिक इत्यापत्तेः। न चात्र समासविधायकाभावः, (सह सुपा) इत्यस्य सत्त्वात् अन्यथा असमर्थसमासोऽपि विधायकाभावान्न स्यादिति। किञ्च भावनायास्तिङर्थत्वे भावयति घटमितिवत् भवति घटमित्यपि स्यात् धात्वर्थफलाश्रयत्वरूपकर्मत्वसत्त्वात् न च आख्यातार्थव्यापाराश्रयत्वेन कर्त्तृत्वात् तत्संज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम् आख्यातार्थव्यापाराश्रयत्वस्य कर्तृत्वे पाचयति देवदत्तो विष्णुमित्रेणेत्यत्र विष्णुमित्रस्य अकर्तृतापत्तौ तृतीयानापत्तेः ग्रामं गमयति देवदत्तो विष्णुमित्रमित्यत्र विष्णुमित्रस्य अकर्तृतापत्तेः ग्रामस्य गमिकर्मतानापत्तेश्च। तथा च ग्रामाय गमयति देवदत्तो विष्णुमित्रमित्यपि न स्यात्। "गत्यर्थकर्मणि द्वितीया-

चतुर्थ्यौ चेष्टायामनध्वनीति” गत्यर्थकर्मख्येव चतुर्थीविधा-नात्। एतेन णिजन्ते आख्यातार्थं उभयम् तदाश्रयत्वाद् देव-दत्तयज्ञदत्तयोः कर्त्तृतेत्यपास्तम्। किञ्च तस्मिन् प्रयोगे आख्यातत्वस्य आवश्यकत्वेन आख्यातशून्ये देवदत्तः पक्तेत्यादौ देवदत्तस्य अकर्त्तृतापत्तेरिति दिक्। सूत्रानुपपत्तिमपि मानत्वेन प्रदर्शयन् उक्तार्थस्य स्वोत्प्रेक्षितत्वं निरस्यति (किञ्चेति) धातुसंज्ञाविधायकम् (भूवादयो धातव) इति सूत्रम्। तत्र भूश्च वाश्चेति द्वन्द्वः। आदिशब्दयोर्व्यवस्था-प्रकारवाचिनोरेकशेषः। ततो भूवौ आदौ येषां ते भूवादयः। तथा च भूप्रभृतयो वा सदृशा धातव इत्यर्थः। तच्च क्रिया-वाचकत्वेन, तथा च क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वं पर्य्यवसन्नम्। अत्र क्रियावाचित्वमात्रोक्तौ वर्ज-नादिरूपक्रियावाचके हि रुग् नानेत्यादावतिव्याप्तिरिति भ्वादिगणपठितत्वमुक्तम् ॥ ६ ॥

तावन्मात्रोक्तौ चाह।

**सर्वनामाव्ययादीनां यावादीनां प्रसङ्गतः।**
**न हि तत्पाठमात्रेण युक्तमित्याकरे स्फुटम्॥१०॥**

गणपठितत्वमात्रोक्तौ सर्वनामाव्ययानामपि धातुत्वं स्यात्। तथा च याः पश्यतीत्यादौ, “आतोधातोः” इति आकार-लोपापत्तिः। ननु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रह-णान्न सर्वनाम्नां ग्रहणं तस्य लाक्षणिकत्वात् इत्यत आह वेत्यादि। अव्यये वा इत्यादावतिप्रसङ्गः। तादृशस्यैव गणे-ऽपि पाठेन निर्णयासम्भवात्। तथा च विकल्पार्थको वातीति प्रयोगः स्यादिति भावः। न च गतिगन्धनार्थनिर्देशो निया-

मकः, तस्यार्थानादेशनादिति भाष्यपर्य्यालोचनया आधुनिकत्वलाभात् ॥ १० ॥

ननु अस्तु क्रियावाचकत्वे सति गणपठितत्वं धातुत्वं क्रिया च धात्वर्थ एव न व्यापार इत्याशङ्कां समाधत्ते ।

**धात्वर्थत्वं क्रियात्वञ्चेद्धातुत्वञ्च क्रियार्थता ।**
**अन्योन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाकरम् ॥११॥**

यदि क्रियात्वं धात्वर्थत्वमेव तर्हि धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः क्रियात्वग्रहे च तदवच्छिन्नवाचकत्वघटितधातुत्वग्रह इत्यन्योन्याश्रय इति ग्रहपदं पूरयित्वा व्याख्येयम् । यथाश्रुतं च अन्यान्याश्रयस्योत्पत्तौ ग्रहे वाऽप्रतिबन्धकत्वाभ्युपगमेनासङ्गत्यापत्तेः । न च अन्यतमत्वं धातुत्वं भूवादय इत्यस्य वैयर्थ्यापत्तेरित्यभिप्रेत्याह ( अस्त्विति ) व्यापारसन्तानः क्रिया तद्वाचकत्वे सति गणपठित्वमित्यर्थः । ननु सत्तादीन् फलांशानन्यतमत्वेन आदाय तद्वाचकत्वे सति गणपठितत्वलक्षणमुच्यताम् । धात्वर्थत्वात् तेषां क्रियाशब्देन व्यवहारो भाष्यादौ कृतोऽपि उत्पत्स्यत इति चेन्न अन्यतममध्ये विकल्पस्यापि विकल्पयतीति प्रयोगानुसारात् प्रवेशावश्यकत्वेन तदर्थके वेत्यव्यये उक्तरीत्या गणपठितत्वसत्त्वेनातिव्याप्तेरिति ॥ ११ ॥

ननु अस्यैव धातुत्वे अस्तीत्यादौ क्रियाप्रतीत्यभावादस्त्यादीनां तद्वाचकानामधातुत्वप्रसङ्ग इत्यत आह ।

**अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ।**
**अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ॥ १२ ॥**

( अस्त्यादौ ) अस् भुवीत्यादौ ( धर्म्यंशे ) धर्मिभागे ( भाव्ये ) भाव्यत्वेन विवक्षिते । (अस्त्वेव) प्रतीयत एव । अयमर्थः स ततो गतो न वेति प्रश्ने महता यत्नेन अस्तीति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयत एव उत्पत्त्यादि-बोधने तु सुतरां "रोहितोलोहितादासीद्‌धुन्धुस्तस्य सुतोऽभवदित्यादि" दर्शनात् ।

किञ्च अत्र भावनाविरहे लडादिव्यवस्था न स्यात् तस्या एव वर्त्तमानत्वादिविवक्षायां लड्विधानात् ।

"क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिकेति"

वाक्यपदीयादिति । ननु एवमस्तीत्यत्र स्पष्टं कुतो न बुध्यत इत्यत आह ( अन्यत्रेति ) ( अशेषभावात् ) भावनायाः फलसमानाधिकरणत्वात् । तथा च भावनायाः फलसामानाधिकरण्यं तत् स्पष्टत्वे दोष इति भावः । नन्वेवं किं करोतीति प्रश्ने पचतीत्युत्तरस्येव अस्तीत्युत्तरमपि स्यादिति चेत् इष्टापत्तेः आसन्नविनाशं कञ्चिदुद्दिश्य किं करोतीति प्रश्ने अस्तीत्युत्तरस्य सर्वसम्मतत्वात् । इतरत्र तु मुख्यतया निश्चिते किं करोतीति प्रश्नः पाकादिविशेष-गोचर एवेत्यवधारणादस्तीति नोत्तरमिति ॥ १२ ॥

ननु भावनायाः फलनियतत्वात् फलाश्रयस्य कर्मत्वात् सर्वेषां क्रियावाचकत्वे सकर्मकतापत्तिरित्यत आह ।

**फलव्यापारयोरेकनिष्ठतायामकर्मकः ।**
**धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ १३ ॥**

(एकनिष्ठतायाम्) एकमात्रनिष्ठतायाम् भिन्नाधिकरण-

वृत्तितायामिति यावत् तेन गम्यादौ फलस्य कर्तृनिष्ठत्वेऽपि नातिव्याप्तिः। (अकर्मकः) यथा भ्वादिः (तयोः) (फलव्यापारयोः) आश्रयभेदे (सकर्मकः) इत्यर्थः। उक्तञ्च वाक्यपदीये।

आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते।

अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मक इति॥

(बिभ्रदिति) स्वधारणानुकूलो व्यापारोऽत्रापि गम्यत इति भावः। (तेन कर्मणा) सकर्मकत्वन्तु (न अन्तर्भावात्) फलांशेन सामानाधिकरण्यसत्त्वादित्यर्थः (आत्मानमिति) जानाति इच्छतीत्यादौ च द्वावात्मानौ शरीरात्मा अन्तरात्मा च। तत्र अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति "कर्मवत् कर्मणे"ति सूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठतामादाय सकर्मकत्वमवधेयम्॥ १३॥

ननु असत्वभूतक्रियाया धात्वर्थत्वे पाक इत्यत्रापि तत्प्रत्ययापत्तिः। न चेष्टापत्तिः कृदभिहितो भावो द्रव्यवत् प्रकाशत इति भाष्यविरोधादित्यत आह।

**आख्यातशब्दे भागाभ्यां साध्यसाधनरूपता।**

**प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः॥१४॥**

(आख्यातशब्दे) पश्य मृगो धावतीत्यादौ। (भागाभ्याम्) तिङन्ताभ्याम् प्रकृतिप्रत्ययभागाभ्यामिति विवरणकारोक्तम् अपव्याख्यानम् पचतीत्यत्रापि भागद्वयसत्त्वात् (साध्यसाधनरूपता) यथाक्रमं ग्राह्या। साध्यत्वं क्रियान्तराकाङ्क्षानुत्थापकरूपवत्त्वम्। साधनत्वं कारकत्वेन अन्वयित्वम्। (स घञादिष्वपीति) प्रकृत्या, साध्यावस्था। प्रत्ययेन साधनावस्था। इयान्विशेषः। घञाद्युपस्थाप्या लिङ्गसंख्यान्वयिनी कारकत्वान्वयिनी च आख्यातान्तोपात्ता तु नैवम्। तथापि

कारकत्वेन अन्वयित्वमात्रेण दृष्टान्तदार्ष्टान्तिकतेत्यवधेयम् । न च घञन्ते धातुना तथाभिधाने मानाभावः, ओदनस्य पाक इति कर्मषष्ठ्या मानत्वात् । न च अध्याहृततिङन्त-क्रियान्वयात् षष्ठी "कर्तृकर्मणोः कृतीति" कृदन्तेन योग एव तद्विधानात् "न लोकाव्ययनिष्ठाखलर्थतृनामिति" लादेशयोगे षष्ठीनिषेधाच्च । एवं रीत्या काष्ठैः पाक इत्यादावपि दृष्टमेव, एवं फलांशोऽपि धातुना असत्त्वावस्थापन्न एवोच्यते । अतएव स्तोकं पचतीतिवत् स्तोकं पाक इत्युपपद्यते इति ॥१४

एतदेव स्पष्टयति ।

**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।**
**सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥१५॥**

न च घञादिभिः सिद्धत्वेनाभिधाने मानाभावः, पाक इत्युक्ते भवति नष्टो वेत्याकाङ्क्षोत्थापनस्यैव मानत्वात् धातूपस्थाप्यायां तदसम्भवस्य उक्तत्वात् स्तोकः पाकः इत्यनापत्तेश्च । तस्माद्धात्वर्थान्वये स्तोकादिशब्देभ्यो द्वितीया घञार्थान्वये प्रथमा पुंलिङ्गता चेति तत्सिद्धये घञादेः शक्तिरुपेया । एतेन घञादीनां प्रयोगसाधुतामात्रमिति नैयायिकनव्योक्तमपास्तम् । न च घञन्तशक्त्युपस्थाप्यान्वये स्तोकः पाक इति भवतीति वाच्यम् । घञन्तानुपूर्व्याः शक्यतावच्छेदकत्वे गौरवादनुशासनाच्च घञादेरेव तथाशक्तिकल्पनादिति दिक् । एवञ्च घञ्शक्त्यभिप्रायेण कृदभिहित इति भाष्यमतो न तद्विरोध इति भावः ॥ १५ ॥

ननु कारकाणां भावनान्वयनियम एव पाक इत्यत्रापि कर्मषष्ठ्यनुसारेण भावनाया वाच्यत्वं सिध्येत् स एव कुत इत्याशङ्कां समाधत्ते ।

**सम्बोधनान्तं क्त्वोऽर्थाः कारकं प्रथमो वतिः ।**
**धातुसम्बन्धाधिकारनिष्पन्नमसमस्त नञ् ॥१६॥**

सम्बोधनान्तस्य क्रियायामन्वयः। त्वं ब्रूहि देवदत्ते-त्यादौ निघातानुरोधात् "समानवाक्ये निघातयुष्मदस्मदा-देशा" इत्यनेन समानवाक्य एव तन्नियमात्। उक्तं हि वाक्यपदीये।

सम्बोधनपदं यच्च तत् क्रियाया विशेषणम्।
व्रजानि देवदत्तेति निघातोऽत्र तथासतीति।

पचति भवति देवदत्तेत्यादौ तु सूत्रभाष्यादिरीत्यैकवाक्य-तासत्वात् स्यादेव निघातः। "तिङ्ङतिङ इति सूत्रेऽपि" तिङन्तानामपि एकवाक्यतास्वीकारात्। एक तिङ्वाक्यमिति वदतां वार्त्तिककाराणां मते परं न। वस्तुतः एकतिङ्विशे-ष्यकं वाक्यमिति तदभिप्रायस्य हेलाराजीयादौ वैयाकरणभूष-णेऽस्माभिश्च प्रतिपादितत्वात् तन्मतेऽपि भवत्येव इत्यवधेयम्। ( क्त्वोऽर्थाः ) "क्रियाभ्यावृत्तिगणने कृत्वसुच्" इति क्रिया-योगे तत्साधुत्वोक्तेः क्रियाया अभ्यावृत्तिः पुनः पुनः जन्म। तस्मिन् द्योत्ये इति तदर्थात्। (कारकम्) कारके इत्यधिकृत्य तेषां व्युत्पादनात्। कारकशब्दो हि क्रियापरः करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः। तथा च अग्रिमेषु अपादानादिसंज्ञाविधिषु क्रियार्थककारकशब्दानुवृत्त्या क्रिया-न्वयिनामेव संज्ञेति भाष्ये स्पष्टम् ( प्रथमो वतिः ) "तेन तुल्यं क्रिया चेद्वतिः" इति विहितः तत्र यत्तुल्यं सा क्रिया चेदिति उक्तत्वात्। ( धातुसम्बन्धाधिकारे ) "धातुसम्बन्धे प्रत्ययाः" इत्यधिकृत्य तेषां विधानात्। (असमस्त नञ्) समासायोग्यः प्रसज्यप्रतिषेधीयो नञित्यर्थः। उत्तरपदार्थान्वयेऽपि समास-

विकल्पेन पक्षे असमस्तत्वात् यथाश्रुतग्रहणायोगात्। न च असमस्तनञः क्रियान्वये मानाभावः न त्वं पचसि न युवां पचथः चैत्रो न पचति घटो न जायते इत्यादौ क्रियाया एव निषेधप्रतीतेः। अतएव विद्यमानेऽपि घटे तथा प्रयोगः। तथा च घटो नास्तीत्यत्राप्यस्तित्वाभाव एव बोध्यते। न हि घटोन जायते। नास्तीति अनयोर्धात्वर्थभेदमन्तरेण अस्ति विशेषः। तथा च भूतले न घट इत्यत्राप्यस्तीति अध्याहार्य्यम्। प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे धातुजन्यभावनोपस्थितेः हेतुत्वस्य क्लृप्तत्वात्। शेषं नञर्थनिर्णये वक्ष्यते॥१६

**तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्।**
**साधुत्वमष्टकस्यास्य क्रिययैवावधार्य्यताम्॥१७॥**

"यस्य च भावेन भावलक्षणम्" इत्यत्र भावनार्थकभावशब्देन तद्योगे साधुत्वाख्यानलाभात् "षष्ठी चानादर" इति तदग्रिमसूत्रेऽपि चकाराङ्गावेनेत्यप्यन्वेतीत्यर्थः (साधुत्वमिति) तत्स्वरूपन्तु वक्ष्यते (क्रिययैवेति) अयं भावः। भूवादिसूत्रादिषु प्रायः क्रियाशब्देन भावनाव्यपदेशात् तत्र तस्य साङ्केतिकी शक्तिः फलांशे क्वाचित्कः क्रियत इति यौगिकः प्रयोगः। तथा च संज्ञाशब्दस्य अनपेक्षप्रवृत्तत्वेन बलवत्त्वात् भावनान्वय एव साधुता लभ्यते। अतएव संज्ञाशब्दप्राबल्यात् रथन्तरम् उत्तराग्रन्थपठित ऋक्ष्वेव गेयम् न तु वेदे तत् उत्तर पठ्यमानर्क्ष्विति नवमे निर्णीतम्। किञ्च फलांशोऽपि भावनायां विशेषणं कारकाण्यपि क्वचित् तथाभूतानीति। "गुणानाञ्च परार्थत्वात् असम्बन्धः समत्वात् स्यादिति" न्यायेन सर्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाण्यन्वियन्ति। न हि भिक्षुकोऽपि भिक्षुकान्तरं याचितुमर्हति

सत्यन्यस्मिन् अभिक्षुक इति न्यायेन अपि फलं त्यक्त्वा भावनायामेवान्वियन्तीति मीमांसका अपि मन्यन्ते। एवञ्च विशेष्यतया कारकादिप्रकारकबोधं प्रति धातुजन्यभावनोपस्थितिः हेतुरिति कार्य्यकारणभावस्य क्लृप्तत्वात् यत्रापि पक्ता पाक इत्यादौ भावना गुणभूता तत्रापि क्लृप्तकार्य्यकारणभावानुरोधात् तस्यामेव अन्वय इत्यवसीयते इत्यादि भूषणे प्रपञ्चितम्। केचित् तु भूतले घटः देवदत्तो घटमित्यादावन्वयबोधाकाङ्क्षानिवृत्त्योः अदर्शनात् न तद्व्यतिरेकेण साधुत्वलाभ इत्याहुः ॥ १७ ॥

स्वयमुपपत्तिमाह।

**यदि पक्षे पिबत्यर्थः कारकञ्च नञादिषु।**

**अन्वेति त्यज्यतां तर्हि चतुर्थ्यां स्पृहिकल्पना ॥ १८**

पर्वतोवह्निमान् धूमात् महानसवत् भूतले न घटः। भूतले घट इत्यादिपदात् एवम् आदिषु अनुशासनविरोधेऽपि यदि साधुत्वम् अन्वयश्च अभ्युपेयते तर्हि चतुर्थ्यां स्पृहिकल्पनापि त्यज्यतामित्यर्थः। अनुशासनानुरोधतौल्ये अर्द्धजरतीयम् अयुक्तमिति भावः ॥ १८ ॥

एवं कर्त्रादौ विहितानामिन्यादीनां क्रिययैवान्वय इत्याह।

**अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः।**

**क्रिया सम्बध्यते तद्वत्कृतपूर्व्यादिषु स्थिता ॥ १९ ॥**

न विविच्य ग्रहोग्रहणं यस्याः सा अविग्रहा गुणीभूतेति यावत्। तथा च ग्रामं गत इत्यत्र यथा क्तप्रत्ययार्थे गुणीभूतापि क्रिया ग्रामादिकर्मभिः सम्बध्यते तथा कृतपूर्वी कटमित्यत्रापि गुणभूता इत्यादिभिरित्यर्थः। न च वृत्तिमात्रे समुदायशक्तेर्वक्ष्यमाणत्वात् तत्रान्तर्गता भावना पदार्थैकदेश

इति कथं तत्रान्वय इति वाच्यम् नित्यसापेक्षेषु एकदेशेऽपि "देवदत्तस्य गुरुकुलं" "चैत्रस्य नप्ते"त्यादाविवान्वयाभ्युपगमात् । एवं भोक्तुं पाकः भुक्त्वा पाक इत्यपि द्रष्टव्यम् ॥१९॥

अतिप्रसङ्गमाशङ्क्य समाधत्ते ।

**क्त्वोऽर्थाः क्त्वातुमुन्वत्स्युरिति चेत्सन्ति हि क्वचित् ।**
**अतिप्रसङ्गो नोक्ताव्योऽभिधानस्य समाश्रयात् ॥२०॥**

भोक्तुं पाकः भुक्त्वा पाक इत्यादौ "तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम्" "समानकर्तृकयोः पूर्वकाल" इति क्रियावाचकोपपदे क्रिययोः पूर्वोत्तरकाले विधीयमाना अपि तुमुन्नादयो गुणभूतां तामादाय यथा जायन्ते तथा क्त्वोऽर्थाः अपि स्युः । एकः पाक इत्यत्र "एकस्य सकृच्च" द्वौ पाकौ त्रयश्चत्वार इत्यत्र "द्वित्रिचतुर्भ्यः सुच्" । पञ्चेत्यत्र कृत्वसुच् स्यात् । तथा च सकृत्पाकः द्विः त्रिश्चतुः पाक इत्याद्यापत्तिरिति चेदिष्टापत्तिः द्विर्वचनमित्यादिदर्शनात् । अतिप्रसङ्गस्तु अनभिधानान्नेत्याह । अतीति । "न हि वचिरन्तिपरः प्रयुज्यत" इत्याद्यभियुक्तोक्तरीत्या समाधेयमिति भावः । केचित् तु "क्रियाभ्यावृत्तिगणन" इत्यत्र क्रियाग्रहणं व्यर्थं तस्या एवाभ्यावृत्तिसम्भवेन सामर्थ्यात् तल्लाभात् । तथा च साध्यमात्रस्वभावक्रियालाभाय तदिति वाच्यम् न च पाक इत्यादौ तादृशीति नातिप्रसङ्गः । द्विर्वचनमिति च द्विःप्रयोगो द्विर्वचनमिति व्युत्पत्त्या "द्विर्वचनेऽचीति" ज्ञापकं वा आश्रित्योपपादनीयमित्याहुः ॥ २० ॥

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बाधादावश्यकी इति धातोरेव भावना वाच्या न आख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते ।

**भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ।**

**साधुत्वं तदभावेऽपि बोधो नेह निवार्य्यते ॥२१॥**

भेद्यं विशेष्यं भेदकं विशेषणं तयोर्यः सम्बन्धस्तस्य यो भेदः तन्निबन्धनं साधुत्वम् । अयमर्थः । व्याकरणस्मृतिः शब्द साधुत्वपरा तत्रैवावच्छेदकतया कल्प्यधर्मस्य शक्तित्वं वदतां मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तत् रीत्या विचारे साधुत्वनिर्णय एव शक्तिनिर्णय उच्यते । अतिरिक्त-शक्तिवादेऽपि आख्यातानामसाधुता भावनायां स्यादेव तथा च चतुर्थ्यर्थे तृतीयाप्रयोगवद्वात्वर्थभावनायाम् आख्यातप्रयोगे यज्ञे कर्मण्यसाधुशब्दप्रयोगात् "नानृतं वदे"दिति निषेधो-ल्लङ्घनप्रयुक्तं प्रायश्चित्तं दर्शनान्तरीयव्युत्पत्तिमतां स्यादिति । ननु त्वन्मते नानृतमिति निषेधः क्रत्वर्थ एव न सिध्येत् आख्यातेन कर्त्तुः उक्तत्वात् श्रुत्या पुरुषार्थ एव स्यात् प्रकर-णाद्धि क्रत्वर्थता तच्च श्रुतिविरोधे बाध्यत इति चेन्न तिङर्थस्तु विशेषणमित्यनेन परिहृतत्वात् न हि गुणभूतः कर्त्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमर्हम् । भावना तु प्रधानं तं ग्रहीतुं सम-र्थेति प्रकरणात् क्रत्वर्थतैव । अस्तु वा क्रतुयुक्तपुरुषधर्मः अनुष्ठाने विशेषाभावात् "जर्ज्जभ्यमानो न ब्रूयान्मयि दक्षक्रतू" इति वाक्योक्तमन्त्रविधिवत् इत्यादि भूषणे प्रपञ्चितम् । ननु आख्यातस्य भावनायाम् असाधुत्वे ततस्तद्बोधो न स्यात् साधुत्वज्ञानस्य शब्दबोधहेतुत्वादित्यत आह बोध इति असा-धुत्वेऽपि साधुत्वभ्रमात् बोधोऽस्तु नाम अपभ्रंशवत् । असा-धुत्वन्तु स्यादेवेति भावः । वस्तुतः साधुत्वज्ञानं न हेतुस्तदव्य-तिरेकानिर्णयोऽपि न प्रतिबन्धक इत्यसाधुः अनुमानेन इत्यत्र वक्ष्यामः ॥ २१ ॥

रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्मिते ।
पूर्णो भूषणसारेऽस्मिन् धात्वाख्यातार्थनिर्णयः ॥

इति वैयाकरणभूषणसारे धात्वर्थाख्यातसामान्यार्थयो-
र्निरूपणम् ।

---

प्रत्येकं दशलकाराणामर्थं निरूपयति ।

**वर्त्तमाने परोक्षे श्वोभाविन्यर्थे भविष्यति ।**
**विध्यादौ प्रार्थनादौ च क्रमात् ज्ञेया लड़ादयः ॥२२**

लडादयश्चितः षट् क्रमेणार्थेषु द्रष्टव्याः । तथा हि वर्त्त-मानेऽर्थे लट्, "वर्त्तमाने लडि"ति सूत्रात् । प्रारब्धापरि-समाप्तत्वं भूतभविष्यद्भिन्नत्वं वा वर्त्तमानत्वम् । पचतीत्यादा-वधिश्रयणाद्यधःश्रयणान्ते मध्ये तदस्तीति भवति लट् प्रयोगः । आत्मास्ति पर्वताः सन्तीत्यादौ तत्तत्कालिकीनां क्रियाणाम् अनित्यत्वात् तद्विशिष्टस्य उत्पत्त्यादिकमादाय वर्त्तमानत्वमूह्यम् । उक्तञ्च भाष्ये "इह भूतभविष्यद्वर्त्त-मानानां राज्ञां क्रियाः तिष्ठतेरधिकरणमिति" ।

परतो भिद्यते सर्वमात्मा तु न विकम्पते ।
पर्वतादिस्थितिस्तस्मात्पररूपेण भिद्यत इति ।

वाक्यपदीये च । एवं "तम आसीत्" "तुच्छेनाभ्व-पिहितं यदासीत्" । "अहमेकः प्रथममासं वर्त्तामि च भवि-ष्यामि" च इत्यादिश्रुतयोऽपि योज्याः । तच्च वर्त्तमानत्वादि लड़ादिभिर्द्योत्यते । क्रियासामान्यवाचकस्य तद्विशिष्टे लक्ष-णायां लडादेस्तात्पर्य्यग्राहकत्वेनोपयोगात् । अन्वयव्यति-रेकाभ्यां तद्रूपं लड़ादिवाच्यमेव । अन्यथा प्रत्ययानां वाचक-त्वविलोपापत्तिरित्यपि पक्षान्तरम् ।

लिडर्थमाह परोक्षे इति। "परोक्षे लिडिति" सूत्रात्। कालस्तावदद्यतनानद्यतनभेदेन द्विविधः द्विविधोऽपि भूतभविष्यद्रूपः। तत्र अनद्यतने भूते परोक्षे लिडित्यर्थः। तेन अद्यतने भूते अनद्यतने भविष्यति भूतेऽपि अपरोक्षे च न लिट् प्रयोगः स्यात्। परोक्षत्वञ्च साक्षात्करोमि इत्येतादृश-विषयताशालिज्ञानविषयत्वम्। न च "क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितु"मिति भाष्यात्तस्या अतीन्द्रियत्वेन परोक्षे इत्यव्यावर्त्तकमिति शङ्क्यम् पिण्डीभूताया निदर्शयितुमशक्यत्वेऽपि अवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवात्। अन्यथा पश्य मृगो धावतीत्यत्र तस्या दर्शनकर्मता न स्यादिति प्रतिभाति। व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमतो नोक्तदोषः। अयं पपाचेत्याद्यनुरोधाद्व्यापाराविष्टानामित्यपि वदन्ति। कथं तर्हि "व्यातेने किरणावलीमुदयन्" इति स्वक्रियायाः स्वप्रत्यक्षत्वादिति चेत्। असङ्गतमेव। व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वोपपादनेऽपि अनद्यतनातीतत्वयोरभावेन तदर्थकलिड्सम्भवात्।

लुडर्थमाह। श्वोभाविनीति। अनद्यतने भाविनीत्यर्थः। "अनद्यतने लुडिति" सूत्रात् यथा श्वोभवितेत्यादौ।

लृडर्थमाह भविष्यतीति। भविष्यत्सामान्ये इत्यर्थः लृट् शेष च इति सूत्रात्। यथा घटो भविष्यतीत्यादौ। तत्त्वञ्च वर्त्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम्।

लेटोऽर्थमाह विध्यादाविति। "लिङर्थे लेडिति" सूत्रात्। लिङर्थश्च विध्यादिरिति वक्ष्यते।

लोडर्थमाह। प्रार्थनेति। आदिना विध्याद्याशिषो गृह्यन्ते। "आशिषि लिङ् लोटौ" "लोट् चे"ति सूत्राभ्यां तथावगमात्।

यथा भवतु ते, शिवप्रसाद इत्यादौ। एतयोरर्थौ लिङर्थ एव त्रयाणां समानार्थत्वादिति तन्निर्णयेनैव निर्णयः॥ २२॥

लङादिक्रमेण ङितामर्थमाह।

**ह्योभूते प्रेरणादौ च भूतमात्रे लङादयः।**
**सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः॥२३**

लङर्थमाह। ह्योभूत इति। अनद्यतने भूत इत्यर्थः "अनद्यतने लङिति" सूत्रात्। यथास्य पुत्रोऽभवदित्यादि।

लिङर्थमाह प्रेरणादाविति। "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङि"ति सूत्रात्। (विधिः) प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्त्तनम्। निमन्त्रणम्) नियोगकरणम्। आवश्यके प्रेरणेत्यर्थः। (आमन्त्रणम्) कामचारानुज्ञा। (अधीष्टम्) सत्कारपूर्वको व्यापारः। एतच्चतुष्टयानुगतप्रवर्त्तनात्वेन वाच्यता लाघवात्। उक्तञ्च,

अस्ति प्रवर्त्तनारूपमनुरूपं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया।
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितः कृतमिति।

प्रवर्त्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वं तच्च इष्टसाधनत्वस्य अस्तीति तदेव विध्यर्थः। यद्यपि एतत् कृतिसाध्यत्वस्यापि तज्ज्ञानस्यापि प्रवर्त्तकत्वात् तथापि यागादौ सर्वत्र तल्लोकत एव गम्यत इत्यन्यलभ्यत्वान्न तच्छक्यम्। बलवदनिष्टाननुबन्धित्वज्ञानञ्च न हेतुः द्वेषाभावेन अन्यथासिद्धत्वात्। आस्तिककामुकस्य नरकसाधनताज्ञानदशायामपि उत्कटेच्छया द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च। तस्मादिष्टसाधनत्वमेव प्रवर्त्तना। उक्तञ्च खण्डनमिश्रैः।

पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः ।

प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्त्तनामिति ।

प्रपञ्चितं च एतद्वैयाकरणभूषणे । आदिना "हेतुहेतुमतो- र्लिङ् आशिषि लिङ् लोटौ" इत्यादिसूत्रोक्ता हेतुहेतुमद्भावा- दयो गृह्यन्ते । "यो ब्राह्मणायावगुरेत्तं शतेन यातयादिति" यथा ।

लुङर्थमाह । भूतकाले इति । भूतसामान्ये इत्यर्थः । भूत इत्यधिकृत्य "लुङिति" सूत्रात् । तत्र विद्यमानध्वंस प्रति- योगित्वं भूतत्वम् । तच्च क्रियायां निर्बाधमिति विद्यमानेऽपि घटे घटोऽभूदिति प्रयोगः । विद्यमानध्वंसप्रतियोगी घटा- भिन्नाश्रयक उत्पत्त्यानुकूलोव्यापार इति बोधः ॥ अयमत्र संग्रहः । कालो द्विविधः । अद्यतनोऽनद्यतनश्च । आद्य- स्त्रिविधः भूतभविष्यद्वर्तमानभेदात् । अन्त्योद्विविधः भूतो भविष्यश्च । तत्र वर्त्तमानत्वे लट् । भूतत्वमात्रे लुङ् । भवि- ष्यत्तामात्रे ऌट् । हेतुहेतुमद्भावाद्यधिकार्थे विवक्षायामन- योर्लिङ् । अनद्यतने भूते तत्त्वेन विवक्षिते लङ् । तत्रैव परोक्षत्वविवक्षयां लिट् । तादृशे भविष्यति लुट् इति द्रष्टव्यः ।

ऌङर्थमाह । सत्यामिति । क्रियाया अतिपत्तिः अनि- ष्पत्तिः तस्यां गम्यमानायाम् । (भूते भाविनि) हेतुहेतुमद्भावे सति ऌङित्यर्थः । "लिङ्निमित्ते ऌङ् क्रियातिपत्ताविति" सूत्रात् । लिङोनिमित्तं हेतुहेतुमद्भावादि । यथा सुवृष्टिश्चे- दभविष्यत् सुभिक्षमभविष्यत् । वह्निश्चेत् प्राज्वलिष्यत् ओदन- मपक्ष्यदित्यादौ । अत्र वह्न्यभिन्नाश्रयकप्रज्वलनानुकूल- व्यापाराभावप्रयुक्त ओदनाभिन्नाश्रयकविक्लित्यनुकूलव्यापारा- भाव इति शाब्दबोध इति रीत्या द्रष्टव्यम् । अयञ्च अर्थ-

निर्देश उपलक्षणम् । अर्थान्तरेऽपि बहुशो विधानदर्शनात् । प्रसिद्धत्वादिष्वेवार्थेषु शक्तिरन्यत्र लक्षणेति मतान्तरोक्त्या चोक्तम् एतेषां क्रमनियामकत्वानुबन्धक्रम एव । अतएव पञ्चमो लकार इत्यनेन मीमांसकैर्लेट् व्यवह्रियत इति दिक् ॥२३॥

इति वैयाकरणभूषणसारे लकारविशेषार्थनिरूपणम् ।

---

सुबर्थमाह ।

आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा ।
यथायथं विभक्त्यर्थाः "सुपां कर्मेति" भाष्यतः ॥२४॥

द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः । तथा हि "कर्मणि द्वितीया" तत्र "कर्तुरीप्सिततमम्" क्रियाजन्यफलाश्रय इत्यर्थः क्रियाजन्यफलवत्त्वेन कर्मण एव कर्तुरीप्सिततमत्वात् । "तथा युक्तञ्चानीप्सित" मित्यादिसंग्रहायैवमेव युक्तम् । ईप्सितानीप्सितयोः शाब्दबोधे भानाभावेन संज्ञायामिव तदुपयोगो न तु वाच्यकोटौ तत्प्रवेशः । तथा च क्रियायाः फलस्य च धातुनैव लाभादनन्यलभ्य आश्रय एवार्थः । तत्त्वञ्च अखण्डशक्तिरूपमवच्छेदकम् । ओदनं पचतीत्यत्र विक्लित्त्याश्रयत्वात् कर्मता । घटं करोतीत्यत्रोत्पत्त्याश्रयत्वात् उत्पत्तेर्धात्वर्थत्वात् । जानातीत्यत्र आवरणभङ्गरूपज्ञाधात्वर्थफलाश्रयत्वात् । अतीतानागतादिगोचरज्ञानेऽपि ज्ञानजन्यस्य तस्यावश्यकत्वात् । अन्यथा यथा पूर्वं न जानामीत्यापत्तेः । अतीतादेराश्रयता च विषयतया ज्ञानाश्रयता नैयायिकानामिव सत्कार्यवादसिद्धान्ताद्वा उपपद्यते इति । उक्तञ्च

तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयत इति ।

ननु चैत्रो ग्रामं गच्छतीत्यत्र ग्रामस्येव चैत्रस्यापि क्रियाजन्यग्रामसंयोगरूपफलाश्रयत्वात् कर्मतापत्तौ चैत्रं चैत्रो गच्छतीत्यापत्तिः। प्रयागतः काशीं गच्छति चैत्रे प्रयागं गच्छतीत्यापत्तिश्च क्रियाजन्यसंयोगस्य काश्यामिव विभागस्य प्रयागेऽपि सत्त्वादिति चेन्न ग्रामस्येव चैत्रस्यापि फलाश्रयत्वेऽपि तदीयकर्तृसंज्ञया कर्मसंज्ञया बाधेन चैत्रश्चैत्रमिति प्रयोगासम्भवात्। द्वितीयोत्पत्तौ संज्ञाया एव नियामकत्वात्। अन्यथा गमयति कृष्णं गोकुलमित्यत्रेव पाचयति कृष्णेनेत्यत्रापि कृष्णपदाद्द्वितीयापत्तेः। शाब्दबोधश्चैत्रमित्यत्र स्यादिति चेन्न तथा व्युत्पन्नानामिष्टापत्तेः। उच्यतां वा प्रकारतासम्बन्धेन धात्वर्थफलविशेष्यकबोधं प्रति धात्वर्थव्यापारानधिकरणाश्रयोपस्थितिर्हेतुरिति कार्य्यकारणभावान्तरम्। प्रकृते चैत्रस्य व्यापारानधिकरणत्वाभावान्न दोषः। प्रयागस्य कर्मत्वन्तु सम्भावितमपि न, समभिव्याहृतधात्वर्थफलशालित्वस्यैव क्रियाजन्येत्यनेन विवक्षणस्य उक्तप्रायत्वात्। नैयायिकास्तु आद्यदोषवारणाय परसमवेतत्वम् द्वितीयदोषवारणाय धात्वर्थतावच्छेदकत्वं फले विशेषणं द्वितीयावाच्यमिति उपाददते परसमवेतत्वं धात्वर्थक्रियाया मन्वेति तथैव कार्य्यकारणभावान्तरकल्पनात्। परत्वमपि द्वितीयया स्वप्रकृत्यर्थापेक्षया बोध्यते। तथा च चैत्रस्तण्डुलं पचति इत्यादौ तण्डुलान्यसमवेतव्यापारजन्य धात्वर्थतावच्छेदकविक्लित्तिशालित्वात्तण्डुलानां कर्मता। शाब्दबोधस्तु तण्डुलसमवेतधात्वर्थतावच्छेदक-विक्लित्त्यनुकूलतण्डुलान्यसमवेत-क्रियाजनककृतिमांश्चैत्र इत्याहुः। तन्न रोचयामहे परसमवेतत्वादेर्गौरवेणावाच्यत्वात्। अतिप्रसङ्गः किं द्वितीयायाः शाब्दबोधस्य वा। नाद्यः। तावद्वाच्यताकथनेऽपि तत्तादवस्थ्यात् गमयति कृष्णं गोकुल-

